राजन् ! संस्मृत्य संस्मृत्य संवादमिममद्भुतम् ।।
केशवार्जुनयोः पुण्यं हृष्यामि च मुहुर्मुहुः ।।७६।।

कृष्ण-अर्जुनको राजन् ! धर्म-संवाद अद्भुत ।
यो संझदा खुशी हुन्छु बारंबार म [१]सर्वतः ।।

हे राजन्, धृतराष्ट्र ! केशव र अर्जुनको यो अद्भुत र पुण्यकारक संवादको संझना भएर, मलाई बारंबार (हर बखत) हर्ष भई रहेको छ ।

तच्च संस्मृत्य संस्मृत्य रूपमत्यद्भुतं हरेः ।
विस्मयो मे महान्राजन् ! हृष्यामि च पुनः पुनः ।।७७।।

राजन् ! त्यै हरिको [२]रूप संझीसंझी महाद्भुत ।
छक्क पर्छू खुशी हून्छू बारंबार यहाँ म त ।।

अनि हे महाराज ! श्रीहरिको त्यो अत्यन्त अद्भुत (कहिल्यै न देखिएको गजब) विश्वरूप को पनि बराबर संझना भएर मलाई बडो आश्चर्य र हरबखत हर्ष पनि हुन्छ ।

यत्र योगेश्वरः कृष्णो यत्र पार्थो धनुर्धरः ।।
तत्र श्रीविजयो भूतिर्ध्रुवा नीतिर्मतिर्मम ।।७८।।

योगेश्वर[३] जहाँ कृष्ण [४]धनुष्मान् [५]पार्थ छन् जहाँ ।
म ठान्छु विजय[६] [७]श्रीर [८]भूति [९]सन्नीति छन् तहाँ ।।

म ठान्छु कि योगेश्वर श्रीकृष्ण जहाँ छन्, जहाँ धनुर्धारी अर्जुन छन् त्यहीं श्री विजय, शाश्वत ऐश्वर्य र सच्चानीति पनि रहन्छन् ।(७००)

इति श्रीमद्भगवद्गीतासूपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे श्रीकृष्णअर्जुनसंवादे मोक्ष संन्यासयोगो नाम अष्टदशोऽध्यायः ।।१८।।

---

१. सबै तरहबाट । २. विश्वरूप । ३. योग वा युक्तिका स्वामी । ४. गाण्डीवधारी लिने । ५. अर्जुन । ६. जितबाजी । ७. जयलक्ष्मी या शोभा । ८. नित्य ऐश्वर्य । ९. सच्चा न्याय ।

ॐश्रीपरमात्मने नमः

# अथ श्रीविष्णुसहस्रनामस्तोत्रम्

यस्य स्मरणमात्रेण जन्मसंसारबन्धनात् । विमुच्यते नमस्तस्मै विष्णवे प्रभविष्णवे ।। नमः समस्तभूतानामादि भूताय भूभृते । अनेकरूपरूपाय विष्णवे प्रभविष्णवे ।। वैशम्पायन उवाच-श्रुत्वा धर्मानशेषेण पावनानि च सर्वशः। युधिष्ठिरः शान्तनवं पुनरेवाभ्यभाषत ।। युधिष्ठिर उवाच-किमेकं दैवतं लोके किं वाप्येकं परायणम् । स्तुवन्तः कं कमर्चन्तः प्राप्नुयुर्मानवाः शुभम ।। को धर्मः सर्वधर्माणां भवतः परमो मतः। किं जपन्मुच्यते जन्तुर्जन्मसंसारबन्धनात ।।३।।भीष्म उवाच-जगत्प्रभुं देवदेवमनन्तं पुरूषोत्तमम् । स्तुवन्नामसहस्रेण पुरूषः सततोत्थितः ।।४।। तमेव चार्चयन्नित्यं भक्त्या पुरूषमव्ययम् । ध्यायन्स्तुवन्नमस्यंश्च यजमानस्तमेव च ।।५।। अनादिनिधनं विष्णुं सर्वलोक महेश्वरम् । लोकाध्यक्षं स्तुवन्नित्यं सर्वदुःखातिगो भवेत् ।। ब्रह्मण्यं सर्वधर्मज्ञं लोकानां कीर्तिवर्धनम् । लोकनाथं महद्भूतं सर्वभूतभवोद्भवम् ।।७।। एष मे सर्वधर्माणां धर्मोऽधिक तमो मतः । यद्भक्त्या पुण्डरीकाक्षं स्तवैरर्चेन्नरः सदा ।।८।। परमं यो महत्तेजः परमं यो महत्तपः । परमं यो महद्ब्रह्म परमं यः परायणम् ।।९।। पवित्राणां पवित्रं यो मङ्गलानां च मङ्गलम् । दैवतं देवतानां च भूतानां योऽव्ययः पिता ।।१०।। यतः सर्वाणि भूतानि भवन्त्यादियुगागमे । यस्मिंश्च प्रलयं यान्ति पुनरेव युगक्षये ।।११।। तस्य लोक प्रधानस्य जगन्नाथस्य भूपते । विष्णोर्नामसहस्रं मे शृणु पापभयापहम् ।।१२।।यानि नामानि गौणानि विख्यातानि महात्मनः ।

ऋषिभिः परिगीतानि तानि वक्ष्यामि भूतये ।।१३।। ॐ विश्वं विष्णुर्वषट्कारो भूतभव्यभवत्प्रभुः । भूतकृद्भूतभृद्भावो भूतात्मा भूतभावनः ।।१४।। पूतात्मा परमात्मा च मुक्तानां परमा गतिः । अव्ययः पुरूषः साक्षी क्षेत्रज्ञोऽक्षर एव च ।।१५।। योगो योगविदां नेता प्रधान पुरूषेश्वरः । नारसिंहवपुः श्रीमान्केशवः पुरूषोत्तमः ।।१६।। सर्वः शर्वः शिव स्थाणुर्भूतादिनिधिरव्ययः । सम्भवो भावनो भर्ता प्रभवः प्रभुरीश्वरः।।१७।स्वयम्भूः शम्भुरादित्यः पुष्कराक्षो महास्वनः । अनादिनिधनो धाता विधाता धातुरूत्तमः।।१८।।अप्रमेयो हृषीकेशः पद्मनाभोऽमरप्रभुः । विश्वकर्मा मनुस्त्वष्टा स्थविष्ठः स्थविरो ध्रुवः ।।१९।। अग्राह्य शाश्वतः कृष्णो लोहिताक्षः प्रतर्दनः । प्रभूतस्त्रिककुब्धाम पवित्रं मङ्गलं परम् ।।२०।। ईशानः प्राणदः प्राणो ज्येष्ठः श्रेष्ठः प्रजापतिः । हिरण्यगर्भो भूगर्भो माधवो मधुसूदनः ।।२१।। ईश्वरो विक्रमी धन्वी मेधावी विक्रमः क्रमः । अनुत्तमो दुराधर्षः कृतज्ञः कृतिरात्मवान् ।।२२।। सुरेशः शरणं शर्म विश्वरेताः प्रजाभवः । अहः संवत्सरो व्यालः प्रत्ययः सर्वदर्शनः ।।२३।।अजः सर्वेश्वरः सिद्धः सिद्धिः सर्वादिरच्युतः । वृषाकपिरमेयात्मा सर्वयोगविनिःसृतः ।।२४।। वसुर्वसुमनाः सत्यः समात्मा सम्मितः समः । अमोघः पुण्डरीकाक्षो वृषकर्मा वृषाकृतिः ।।२५।। रूद्रो बहुशिरा बभ्रुर्विश्वयोनिः शुचिश्रवाः । अमृतः शाश्वतः स्थाणुर्वरारोहो महातपाः ।।२६।। सर्वगः सर्वविद्भानुर्विष्वक्सेनो जनार्दनः। वेदो वेदविदव्यङ्गो वेदाङ्गो वेद वित्कविः ।।२७।। लोकाध्यक्षः सुराध्यक्षो धर्माध्यक्षः

कृताकृतः ।चतुरात्मा चतुर्व्यूहश्चतुर्दंष्ट्रश्चतुर्भुजः ।।२८।।
भ्राजिष्णुर्भोजनं भोक्ता सहिष्णुर्जगदादिजः । अनघो विजयो
जेता विश्वयोनिः पुनर्वसुः ।।२९।। उपेन्द्रो वामनः
प्रांशुरमोघः शुचिरूर्जितः। अतीन्द्रः संग्रहः सर्गो धृतात्मा
नियमो यमः ।।३०।। वेद्यो वैद्यः सदायोगी विरहा माधवो
मधुः । अतीन्द्रियो महामायो महोत्साहो महाबलः ।।३१।।
महाबुद्धिर्महावीर्यो महाशक्तिर्महाद्युतिः । अनिर्देश्यवपुः
श्रीमानमेयात्मा महाद्रिधृक ।।३२।। महेष्वासो महीभर्ता
श्रीनिवास सतां गतिः ! अनिरुद्धः सुरानन्दो गोविन्दो गोविदां
पतिः ।।३३।। मरीचिर्दमनो हंसः सुपर्णो भुज गोत्तमः ।
हिरण्यनाभः सुतपाः पद्मनाभः प्रजापतिः ।।३४।। अमृत्यु
सर्वदृक सिंहः सन्धाता सन्धिमान्स्थिरः । अजो दुर्मषणः
शास्ताः विश्रुतात्मा सुरारिहा ।।३५।। गुरुर्गुरुतमो धाम
सत्यः सत्यपराक्रमः। निमिषोऽनिमिषः स्त्रग्वी
वाचस्पतिरुदारधीः।।३६।। अग्रणीर्ग्रामणीः श्रीमान्न्यायो
नेता समीरणः। सहस्त्रमूर्धा विश्वात्मा सहस्त्राक्षः सहस्त्रपात्
।।३७।। आवर्तनो निवृत्तात्मा संवृतः सम्प्रमर्दनः। अहवर्तको
वह्निरनिलो धरणीधरः ।।३८।। सुप्रसादः प्रसन्नात्मा
विश्वधृग्विश्वभुगिवभुः। सत्कर्ता सत्कृतः साधुर्जह्नुर्नारायणो
नरः ।।३९।। असंख्येयोऽप्रमेयात्मा विशिष्टः शिष्टः
कृच्छुचिः। सिद्धार्थः सिद्धसंकल्पः सिद्धिदः सिद्धिसाधनः
।।४०।। वृषाही वृषभो विष्णुर्वृषपर्वा वृषोदरः । वर्धनो
वर्धमानश्च विविक्तः श्रुतिसागरः ।।४१।। सुभुजो दुर्धरो
वाग्मी महेन्द्रो वसुदो वसुः। नैकरूपो बृहद्रूपः शिपिविष्टः
प्रकाशनः ।।४२।। ओजस्तेजोद्युतिधरः प्रकाशात्मा प्रतापनः

। ऋद्धः स्पष्टाक्षरो मन्त्रश्चन्द्रांशुर्भास्करद्युतिः ।।४३।। अमृतांशूद्भवो भानुः शशबिन्दुः सुरेश्वरः । औषधं जगतः सेतुः सत्यधर्म पराक्रमः।।४४।। भूतभव्यभवन्नाथः पवनः पावनोऽनलः। कामहा कामकृत्कान्तः कामः कामप्रदः प्रभुः ।।४५।। युगादिकृद्युगावर्तो नैकमायो महाशनः । अदृश्योऽव्यक्तरूपश्च सहस्रजिदनन्तजित् ।।४६।। इष्टो विशिष्ठः शिष्टेष्टः शिखण्डी नहुषो वृषः । क्रोधहा क्रोधकृत्कर्ता विश्वबाहुर्महीधरः ।।४७।। अच्युतः प्रथितः प्राणः प्राणदो वासवानुजः । अपां निधिरष्ठानमप्रमत्तः प्रतिष्ठितः ।।४८।। स्कन्दः स्कन्दधरो धुर्यो वरदो वायुवाहनः । वासुदेवो बृहद्भानुरादिदेवः पुरन्दरः ।।४९।। अशोकस्तारणस्तारः शूरः शौरिर्जनेश्वरः अनुकूलः शतावर्तः पद्मी पद्मनिभेक्षणः ।।५०।। पद्मनाभोऽरविन्दाक्षः पद्मगर्भः शरीरभृत् । महर्द्धिर्ऋद्धो वृद्धात्मा महाक्षो गरूणध्वजः ।।५१।। अतुलः शरभो भीमः समयज्ञो हविर्हरिः। सर्वलक्षणलक्षण्यो लक्ष्मीवान्समितिञ्जयः ।।५२।। विक्षरो रोहितो मार्गो हेतुर्दामोदरः सहः । महीधरो महाभागो वेगवानमिताशनः ।।५३।। उद्भवः क्षमणो देवः श्रीगर्भः परमेश्वरः। करणं कारणं कर्ता विकर्ता गहनो गुहः ।।५४।। व्यवसायो व्यवस्थानः संस्थानः स्थानदो ध्रुवः। परर्द्धिः परमः स्पष्टस्तुष्टः पुष्टः शुभेक्षणः ।।५५।। रामो विरामो विरजो मार्गो नेयोनयोऽनयः । वीरः शक्तिमतां श्रेष्ठोधर्मो धर्मविदुत्तमः ।।५६।। वैकुण्ठः पुरुषः प्राणः प्राणदः प्रणवः पृथुः । हिरण्यगर्भःशत्रुघ्नो व्याप्तो वायुरधोक्षजः ।।५७।। ऋतुः सुदर्शनः कालः परमेष्ठी परिग्रहः । उग्रः संवत्सरो दक्षो

विश्रामो विश्वदक्षिण: ।।५८।। विस्तार: स्थावर: स्थाणु: प्रमाणं बीजमव्ययम् । अर्थोऽनर्थो महाकोशो महाभोगो महाधन: ।।५९।। अनिर्विण्ण: स्थविष्ठोऽभुर्धर्मयुपो महामख:। नक्षत्रनेमिर्नक्षत्री क्षम: क्षाम: समीहन: ।।६०।। यज्ञ इज्यो महेज्यश्च क्रतु: सत्रं सतां गति: । सर्वदर्शी विमुक्तात्मा सर्वज्ञो ज्ञानमुत्तमम् ।।६१।। सुव्रत सुमुख: सूक्ष्म सुघोष: सुखद: सुहृत। मनोहरो जिमक्रोधो वीरबाहुर्विदारण: ।।६२।। स्वापन: स्ववशो व्यापी नैकात्मा नैककर्मकृत् । वत्सरो वत्सलो वत्सी रत्नगर्भो धनेश्वर: ।।६३।। धर्मगुब्धर्मकृद्धर्मी सदसत्क्षरमक्षरम्। अविज्ञाता सहस्त्रांशुर्विधाता कृतलक्षण: ।।६४।। गभस्तिनेमि: सत्वस्थ: सिंहो भूतमहेश्वर:। आदिदेवो महादेवो देवेशो देधभृद्गुरु: ।।६५।। उतरो गोपतिर्गोप्ता ज्ञानगम्य: पुरातन: । शरीरभुतभृद्भोक्ता कपीन्द्रो भूरिदक्षिण: ।।६६।। सोमपोऽमृतप: सोम: पुरुजित्पुरुसत्तम:। विनयो जय: सत्य सन्धो दाशार्ह: सात्वतां पति: ।।६७।। जीवो विनयितसाक्षी मुकुन्दोऽमितिविक्रम:। अम्भोनिधिरनन्तात्मा महोदधिशय- योऽन्तक:।।६८।। अजो महार्ह: स्वाभाव्यो जितामित्र: प्रमोदन:। आनन्दो नन्दनोनन्द: सत्यधर्मा त्रिविक्रम: ।।६९।। महर्षि:कपिलाचार्य: कृतज्ञोमेदिनीति:। त्रिपदस्त्रि दशाध्यक्षो महाश्रृंग:कृतान्तकृत् ।।७०।। महावराहो गोविन्द: सुषेण: कनकाङ्गदी। गुह्यो गभीरो गहनो गुप्तश्चक्रगदाधर: ।।७१।। वेधा:स्वाङ्गोऽजित: कृष्णो दृढ संकर्शणोऽच्युत: । वरूणो वारुणो वृक्ष: पुष्कराक्षो

महामना: ।।७२।। भगवान्भगहानन्दीवनमालाहलायुध:। आदित्योज्योतिरा दित्या: सहिष्णुर्गतिसत्तम:।।७३।सुधन्वा खण्डपरशुर्दारुणो द्रविणप्रद: । दिविस्पृक्सर्वदृग्व्यासो वाचस्पतिरयोनिज: ।।७४।। त्रिसाम सामग: साम निर्वाणं भेषजं भिषक । सन्यासकृच्छम: शान्तो निष्ठा शान्ति: परायणम्।।७५।। शुभाङ्ग: शांतिद: स्रष्टा कुमुद: कुबलेशय:। गोहितो गोपतिर्गोप्ता वृषभाक्षो वृषप्रिय: ।।७६।। अनिवर्ती निवृत्तात्मा संक्षेप्ता क्षेमकृच्छिव:। श्रीवत्सवक्षा: श्रीवास: श्रीपति: श्रीमतां वर: ।।७७।। श्रीद: श्रीश: श्रीनिवास: श्रीनिधि: श्रीविभावन:। श्रीधर: श्रीकर: श्रेय श्रीमॉंल्लोक त्रयाश्रय: ।।७८।। स्वक्ष: स्वङ्ग: शतानन्दो नन्दिर्ज्योतिर्गणेश्वर: । विजितात्माविधेयात्मा सत्कीर्तिश्छिन्नसंशय: ।।७९।। उदीर्ण: सर्वतश्चक्षुरनीश: शाश्वतस्थिर: । भूशयो भूषणो भूतिर्विशोक: शोकनाशन: ।।८०।। अर्चिश्मा नर्चित: कुम्भो विशुद्धात्मा विशोधन: । अनिरूद्धोऽप्रतिरथ: प्रद्युम्नोऽमितविक्रम: ।।८१।। कालनेमिनिहा वीर: शौरि: शूरजनेश्वर: । त्रिलोकात्मा त्रिलोकेश: केशव: केशिहा हरि:।।८२।। कामदेव: कामपाल: कामी कान्त: कृतागम:। अनिर्देश्यवपुर्विष्णुर्वीरोऽनन्तो धनञ्जय: ।।८३।। ब्रह्मण्यो ब्रह्मकृद्ब्रह्मा ब्रह्म: ब्रह्मविवर्धन । ब्रह्मविदब्राह्मणो ब्रह्मी ब्रह्मज्ञो ब्राह्मणप्रिय: ।।८४।। महाक्रमो महाकर्मा महातेजा महोरग: । महाक्रतुर्महायज्वा महायज्ञो महाकवि: ।।८५।। स्तव्य: स्तवप्रिय: स्तोत्रं स्तुति: स्तोता रणप्रिय:। पूर्ण: पूरयिता पुण्य:

पुण्यकीर्तिरनामयः ।।८६।। मनोजवस्तीर्थकरो वसुरेता वसुप्रदः। वसुप्रदो वासुदेवो वसुर्वसुमना हविः।।८७।। सद्गतिः सत्कृतिः सत्ता सद्भूतिः सत्परायणः। शूरसेनो यदुश्रेष्ठः सन्निवासः सुयामुनः।।८८।। भूतावासो वासुदेवः सर्वासुनीलयोनलः। दर्पहा दर्पदो दृप्तो दुर्धरोऽथापराजितः।।८९।। विश्वमूर्तिमहामूर्तिर्दीप्तमूर्ति रमूर्तिमान्। अनेकमूर्तिर्व्यक्तः शतमूर्तिः शताननः।।९०।। एको नैकः सवः कः किं यत्तत्पदमनुत्तमम् । लोकबन्धुर्लोकनाथो माधवो भक्तवत्सलः ।।९१।। सुवर्णवर्गो हेमाङ्गो वराङ्गश्चन्दनाङ्गदी । वीरहा विषमः शून्यो धृताशीरचलश्चलः ।।९२।। अमानी मानदो मान्यो लोकस्वामी त्रिलोकधृक् ।शुमेधा मेधजो धन्यः सत्यमेधा धराधरः ।।९३।। तेजोवृषो द्युतिधरः सर्वशस्त्रभृतां वरः। प्रग्रहो निग्रहो व्यग्रो नैकशृंगो गदाग्रजः।।९४।। चतुर्मूर्तिश्चतुर्बाहुश्चतुर्व्यूहश्चतु र्गतिः। चतुरात्मा चतुर्भावश्चतुर्वेद विदेकपात्।।९५।। समाव र्तोऽनिवृत्तात्मा दुर्जयो दुरतिक्रमः । दुर्लभो दुर्गमो दुर्गो दुरावासो दुरारिहा ।।९६।। शुभाङ्गो लोकसारंगः सुतन्तुस्तन्तुवर्धनः । इन्द्रकर्मा महाकर्मा कृतकर्मा कृ...गमः ।।९७।। उद्भवः सुन्दरः सुन्दो रत्ननाभः सुलोचनः। अर्को वाजसनः शृंगी जयन्तः सर्वविज्जयी।।९८।। सुवर्णबिन्दु रक्षोभ्यः सर्ववागीश्वरेश्वरः! महाह्रदो महागर्तो महाभूतो महानिधिः ।।९९।। कुमुदः कुन्दरः कुन्दः पर्जन्यः पावनोऽनिलः। अमृतांशोऽमृतवपुः सर्वः सर्वतोमुखः ।।१००।। सुलभः सुव्रतः सिद्धः शत्रुजिच्छत्रुतापनः।

न्यग्रोधोदुम्बरोऽश्वत्थश्चाणूरान्ध्रनिषूदनः।।१०१।। सहस्रार्चिः सप्तजिह्वः सप्तैधाः सप्तवाहनः। अमूर्तिरनघोचिन्तयो भयकृद्भयनाशनः।।१०२।। अणुर्बृहत्कृशः स्थूलो गुणभृन्निर्गुणो महान् । अधृतः स्वधृतः स्वास्यः प्राग्वंशो वंशवर्द्धनः ।।१०३।। भारभृत्कथितो योगी योगीशः सर्वकामदः। आश्रम श्रमणः क्षामः सुपर्णो वायुवाहनः ।।१०४।। धनुर्धरो धनुर्वेदो दण्डो दमयिता दमः। अपराजितः सर्वसहो नियन्ता नियमो यमः।।१०५।। सत्त्ववान्सात्त्विकः सत्यः सत्यधर्मपरायणः। अभिप्रायः प्रियार्होऽर्हः प्रियकृत्प्रीतिवर्धनः ।।१०६।। विहायसगति ज्योतिः सुरुचिर्हुतभुग्विभुः। रविर्विरोचनः सूर्यः सविता रविलोचनः ।।१०७।। अनन्तो हुतभुग्भोक्ता सुखदो नैकजोऽग्रजः। अनिर्विण्णः सदामर्षी लोकाधिष्ठानमद्भुतः ।।१०८।। सनात्सनातनतमः कपिलः कपिरप्ययः। स्वस्तिदःस्वस्तिकृत्स्वस्ति स्वस्तिभुक्स्वस्तिदक्षिणः ।।१०९।। अरौद्रः कुण्डलीचक्री तिक्रम्यूर्जितुशासनः। शब्दातिगः शब्दसह शिशिरः शर्वरीकरः।।११०।। अक्रूरः पेशलो दक्षो दक्षिणः क्षमिणां वरः। विद्वत्तमो वीतभयः पुण्यश्रवणकीर्तनः।।१११।। उत्तारणो दुष्कृतिहा पुण्यो दुःस्वप्ननाशनः । विरहा रक्षणः सन्तो जीवनः पर्यवस्थितः ।।११२।। अनन्तरूपोऽनन्तश्रीर्जितमन्युर्भयापहः। चतुरस्रो गभीरात्मा विदिशो व्यादिशो दिशः ।।११३।। अनादिर्भूर्भुवो लक्ष्मीः सुवीरो रुचिराङ्गदः। जननो जनजन्मादिर्भीमो भीमपराक्रमः ।।११४।। आधार

निलयो धाता पुष्पहासः प्रजागरः। ऊर्ध्वगः सत्पथाचारः प्राणदः प्रणवःपणः ।।११५।। प्रमाणं प्राणनिलयः प्राणभृत्प्राणजीवनः। तत्त्वं तत्त्वविदेकात्मा जन्ममृत्युजरातिगः।।११६।। भूर्भवः स्वस्तरुस्तारः सविता प्रपितामहः। यज्ञो यज्ञपतिर्यज्वा यज्ञाङ्गो यज्ञवाहनः।।११७।। यज्ञभृद्यज्ञकृद्यज्ञी यज्ञभुग्यज्ञसाधनः। यज्ञान्तकृद्यज्ञगुह्यमन्नमन्नाद एव च ।।११८।। आत्मयोनिः स्वयंजातो वैखानः सामगायनः। देवकीनन्दनः स्रष्टा क्षितीशः पापनाशनः ।।११९।। शङ्खभृन्नन्दकी चक्री शार्ङ्गधन्वा गदाधरः। रथाङ्गपाणिरक्षोभ्यः सर्वप्रहरणायुधः।।१२०।। इतीदं कीर्तनीयस्य केशवस्य महात्मनः। नाम्नां सहस्त्रं दिव्यानामशेषेण प्रकीर्तितम्।।१२१।। य इदं शृणुयान्नित्यं यश्चापि परिकीर्तयेत् । नाशुभं प्राप्नुयात्किञ्चित्सोऽमुत्रेह च मानवः।।१२२।। वेदान्तगो ब्राह्मणः स्यात्क्षत्रियो विजयी भवेत् । वैश्यो धनसमृद्धः स्याच्छूद्रः सुखमवाप्नुयात् ।।१२३।। धर्मार्थी प्राप्नुयाद्धर्ममर्थार्थी चार्थमाप्नुयात् । कामानवाप्नुयात्कामी प्रजार्थी प्राप्नुयात्प्रजाम् १२४।। भक्तिमान्यः सदोत्थाय शुचिस्तद्गतमानसः। सहस्त्रं वासुदेवस्य नाम्नामेतत्प्रकीर्तयेत् ।।१२५।।यशः प्राप्नोति विपुलं ज्ञातिप्राधान्यमेव च । अचलां श्रियमाप्नोति श्रेयः प्राप्नोत्यनुत्तमम् ।।१२६।।न भयं क्वचिदाप्नोति वीर्यं तेजश्च विन्दति। भवत्यरोगो द्युतिमान्बलरूपगुणान्वितः ।।१२७।। रोगार्तो मुच्यते रोगाद् बद्धो मुच्येत बन्धनात् ।

भयान्मुच्येत भीतस्तु मुच्येतापन्न आपदः ।।१२८।।
दुर्गाण्यतितरत्याशु पुरुषः पुरुषोत्तमम् । स्तुवन्नामसहस्रेण
नित्यं भक्तिसमन्वितः।।१२९।। वासुदेवाश्रयो मर्त्यो
वासुदेवपरायणः। सर्वपापविशुद्धात्मा याति ब्रह्म सनातनम्
।।१३०।।न वासुदेवभक्तानामशुभं विद्यते क्वचित् ।
जन्ममृत्युजराव्याधिभयं नैवोपजायते ।।१३१।। इमं
स्तवमधीयानः श्रद्धाभक्तिसमन्वितः। युज्येतात्मसुखक्षान्ति
श्रीधृतिस्मृतिकीर्तिभिः।।१३२।। न क्रोधो न च मात्सर्यं न
लोभो नाशुभा मतिः। भवन्ति कृतपुण्यानां भक्तानां
पुरुषोत्तमे।।१३३।। द्यौः सचन्द्रार्कनक्षत्रा खं दिशो
भूर्महोदधिः। वासुदेवस्य वीर्येण विधृतानि महात्मनः
।।१३४।।ससुरासुरगन्धर्वम् सयक्षोरगराक्षसम् । जगद्वशे
वर्ततेदं कृष्णस्य सचराचरम् ।।१३५।। इन्द्रियाणि मनो
बुद्धिःसत्त्वं तेजो बलं धृतिः। वासुदेवात्मकान्याहुः क्षेत्रं
क्षेत्रज्ञ एवच।।१३६।। सर्वागमानामाचारः प्रथमं
परिकल्पते।आचारप्रभवो धर्मो धर्मस्य प्रभुरच्युतः
।।१३७।।ऋषयः पितरो देवा महाभूतानि धातवः।
जङ्गमाजङ्गमं चेदं जगन्नारायणोद्भवम्।।१३८।।योगो ज्ञानं
तथा सांख्यविद्याः शिल्पादि कर्म च । वेदाः शास्त्राणि
विज्ञानमेतत्सर्वं जनार्दनात् ।।१३९।। एको विष्णुर्महद्
भूतंपृथग्भूतान्यनेकशः।त्रींल्लोकान्व्याप्य भूतात्मा भुङ्क्ते
विश्वभुगव्ययः ।।१४०।। इमं स्तवं भगवतो
विष्णोर्व्यासेन कीर्तितम् ।पठेद्य इच्छेत्पुरुषः श्रेयः प्राप्तुं

सुखानि च ।।१४१।। विश्वेश्वरमजं देवं जगतः प्रभवाप्ययम् । भजन्ति ये पुष्कराक्षं न ते यान्ति पराभवम् ।।१४२।।

ॐ तत्सदिति श्रीमहाभारते शतसाहस्त्रयां संहितायां वैयासिक्यामानुशासनिके पर्वणि भीष्मयुधिष्ठिरसंवादे श्रीविष्णोर्दिव्यसहस्त्रनामस्तोत्रम ।।

हरिः ॐ तत्सत् हरिः ॐ तत्सत्हरिः ॐ तत्सत्

ॐ श्रीपरमात्मने नमः

# भीष्मस्तवराजः

जनमेजय उवाच

शरतल्पे शयनास्तु भरतानां पितामहः। कथमुत्सृष्टवान् देहं कं च योगमधारयत् ।।१।। वैशम्पायन उवाच- शृणुष्वावहितो राजञ्शुचिर्भूत्वा समाहितः। भीष्मस्य कुरुशार्दूल देहोत्सर्गं महात्मनः।।२।। निवृत्तमात्रे त्वयन उत्तरे वै दिवाकरे। समावेशयदात्मानमात्मन्येव समाहितः ।।३।। विकीर्णांशुरि वादित्यो भीष्मः शरशतैश्चितः। शुशुभे परया लक्ष्म्या वृतो ब्राह्मणसत्तमैः ।।४।। व्यासेन वेदविदुषा नारदेन सुरर्षिणा। देवस्थानेन वात्स्येन तथाश्मकसुमन्तुना ।।५।।तथा जैमिनिना चैव पैलेन च महात्मना। शाण्डिल्य देवलाभ्यां च मैत्रेयेण च धीमता।।६।। असितेन वसिष्ठेन कौशिकेन महात्मना। हारीतलोमशाभ्यां च तथाऽऽत्रेयेण धीमता ।।७।। वृहस्पतिश्च शुक्रश्च च्यवनश्च महामुनिः।सनत्कुमारः कपिलो वाल्मीकिस्तुम्बुरुः कुरु ।।८।। मौद्गल्यो भार्गवो

रामस्तृणाबिन्दुर्महामुनिः। पिप्पलादोऽथ वायुश्च सर्वतः पुलहः कचः।।९।। काश्यपश्च पुलस्त्यश्च क्रतुर्दक्षः पराशरः।मरीचिरङ्गिराः काश्यो गौतमो गालवो मुनिः।।१०।। धौम्यो विभाण्डो माण्डव्यो धौम्रः कृशणानुभौतिकः। उलूकः परमो विप्रो मार्कण्डेयो महामुनिः।।११।। भास्करिः पूरण कृष्णः सूतः परमधार्मिकः। एतैश्चान्यैर्मुनिगणैर्महाभागैर्महात्मभिः ।।१२।। श्रद्धादमशमापेतैर्वृतश्चन्द्र इव ग्रहैः। भीष्मस्तु पुरुषव्याघ्रः कर्मणा मनसा गिरा।।१३।। शरतल्पगतः कृष्णं प्रदध्यौ प्राञ्जलिःशुचिः।स्वरेण हृष्टपुष्टेन तुष्टाव मधुसूदनम् ।।१४।। योगेश्वरं पद्मनाभं विष्णुं जिष्णुं जगत्पतिम् । कृताञ्जलिपुटो भूत्वा वाग्विदां प्रवरः प्रभुः। भीष्मः परमधर्मात्मा वासुदेवमथास्तुवत् ।।१५।। भीष्म उवाच, आरिराधयिषुः कृष्णं वाचं जिगदिषामि याम् । तया व्याससमासिन्या प्रीयतां पुरुषोत्तमः।।१६।। शुचिं शुचिपदं हंसं तत्पदं परमेष्ठिनम् । युक्त्वा सर्वात्मनाऽऽत्मानं तं प्रपद्ये प्रजापतिम् ।।१७।। अनाद्यन्तं परं ब्रह्म न देवा नर्षयो विदुः। एको यं वेद भवान्धाता नारायणो हरिः।।१८।। नारायणादृषिगणास्तथा सिद्धमहोरगाः। देवा देवर्षयश्चैव यं विदुः परमव्ययम् ।।१९।। देवदानवगन्धर्वा यक्षराक्षस पन्नगाः।यं न जानन्ति को ह्येष कुतो वा भगवानिति ।।२०।। यस्मिन् विश्वानि भूतानि तिष्ठति च विशन्ति च। गुणभूतानि भूतेशे सूत्रे मणिगणा इव ।।२१।।यस्मिन्नित्ये तते तन्तौ दृढे स्रगिव तिष्ठति।सदसद्ग्रथितं विश्वं विश्वाङ्गे विश्वकर्मणि।।२२।। हरिं सहस्रशिरसं सहस्रचरणेक्षणम्

। सहस्रबाहुमुकुटं सहस्रवदनोज्ज्वलम् ।।२३।।प्राहुर्नारायणं देवं यं विश्वस्य परायणम् । अणीयसामणीयांस स्थविष्ठं च स्थवीयसाम् ।।२४।। गरीयसां गरिष्ठं च श्रेष्ठं च श्रेयसामपि। यं वाकेष्वनुवाकेषु निषत्सूपनिषत्सु च ।।२५।।गृणन्ति सत्यकर्माणं सत्यं सत्येषु सामसु। चतुर्भिश्चतुरात्मानं सत्त्वस्थं सात्वतां पतिम् ।।२६।। यं दिव्यैर्देवमर्चन्ति गुह्यैः परमनामभिः। यस्मिन्नित्यं तपस्तप्तं यदङ्गेष्वनुतिष्ठति ।।२७।। सर्वात्मा सर्ववित् सर्वः सर्वज्ञः सर्वभावनः।यं देवं देवकी देवी वसुदेवादजीजनत् ।।२८।। भौमस्य ब्रह्मणो गुप्त्यै दीप्तमग्निमिवारणिः। यमनन्यो व्यपेताशीरात्मानं वीतकल्मषम् ।।२९।।दृष्ट्वानन्त्याय गोविन्दं पश्यत्यात्मानमात्मनि । अतिवाय्विन्द्रकर्माणमति सूर्यातितेजसम् ।।३०।। अतिबुद्धीन्द्रियात्मानं तं प्रपद्ये प्रजापतिम् ।पुराणे पुरुषं प्रोक्तं ब्रह्म प्रोक्तं युगादिषु।।३१।। क्षये संकर्षणं प्रोक्तं तमुपास्यमुपास्महे । यमेकं बहुधाऽऽत्मानं प्रादुर्भूतमधोक्षजम् ।।३२।।नान्यभक्ताः क्रियावन्तो यजन्ते सर्वकामदम् । यमाहुर्जगतः कोशं यस्मिन् संनिहिताः प्रजाः।।३३।। यस्मिँल्लोकाः स्फुरन्तीमे जले शकुनयो यथा ।ऋतमेकाक्षरं ब्रह्म यत्तत्सदसतोः परम् ।।३४।। अनादिमध्यपर्यन्तं न देवा नर्षयो विदुः।यं सुरासुरगन्धर्वाः सिद्धा ऋषिमहोरगाः।।३५।। प्रयता नित्यमर्चन्ति परमं दुःखभेषजम् ।अनादिनिधनं देवमात्मयोनिं सनातनम्।।३६।। अप्रेक्ष्यमनभिज्ञेयं हरिं नारायणं प्रभुम् । यं वै विश्वस्य कर्तारं जगतस्तस्थुषां पतिम् ।वदन्ति जगतो

ऽध्यक्षमक्षरं परमं पदम् ।।३७।। हिरण्यवर्णं यं गर्भमदिते दितेर्दैत्यनाशनम् । एकं द्वादशधा जज्ञे तस्मै सूर्यात्मने नमः।।३८।।शुक्ले देवान् पितॄन् कृष्णे तर्पयत्यमृतेन यः।यश्च राजा द्विजातीनां तस्मै सोमात्मने नमः।।३९।। महतस्तमसः पारे पुरुषं ह्यतितेज सम् ।यं ज्ञात्वा मृत्युमत्येति तस्मै ज्ञेयात्मने नमः।।४०।। यं बृहन्तं बृहत्युक्थे यमग्नौ यं महाध्वरे।यं विप्रसङ्घा गायन्ति तस्मै वेदात्मने नमः।।४१।। ऋग्यजुःसामधामानं दशार्धहविरात्मकम् ।यं सप्ततन्तुं तन्वन्ति तस्मै यज्ञात्मने नमः।।४२।। चतुर्भिश्च चतुर्भिश्च द्वाभ्यां पञ्चभिरेव च। हूयते च पुनर्द्वाभ्यां तस्मै होमात्मने नमः।।४३।।यः सुपर्णा यजुर्नाम छन्दोगात्रस्त्रिवृच्छिराः। रथन्तरं बृहत्साम तस्मै स्तोत्रात्मने नमः।।४४।।यः सहस्रसमे सत्रे जज्ञे विश्वसृजामृषिः।हिरण्यपक्षः शकुनिस्तस्मै हंसात्मने नमः ।।४५।। पादाङ्गं सन्धिपर्वाणं स्वरव्यञ्जनभूषणम् । यमाहुरक्षरं दिव्यं तस्मै वागात्मने नमः।।४६।। यज्ञाङ्गो यो वराहो वै भूत्वा गामुज्जहार ह। लोकत्रयहितार्थाय तस्मै वीर्यात्मने नमः।।४७।। यः शेते योगमास्थाय पर्यङ्के नागभूषिते।फणासहस्त्ररचिते तस्मै निद्रात्मने नमः।।४८।। यस्तनोति सतां सेतुमृतेनामृतयोनिना । धर्मार्थव्यवहाराङ्गैस्त स्मै सत्यात्मने नमः।।४९।। यं पृथग्धर्मचरणाः पृथग्धर्मफलैशिणः।पृथग्धर्मैः समर्चन्ति तस्मै धर्मात्मने नमः ।।५०।। यतः सर्वे प्रसूयन्ते ह्यनङ्गात्माङ्गदेहिनः। उन्मादःसर्वभूतानां तस्मै कामात्मने नमः।।५१।। यं च व्यक्तस्थमव्यक्तं विचिन्वन्ति महर्षयः।क्षेत्रे क्षेत्रज्ञमासीनं

तस्मै क्षेत्रात्मने नमः।।५२।। यं त्रिधाऽऽत्मानमात्मस्थं वृतं षोडशभिर्गुणैः। प्राहुः सप्तदशं सांख्यास्तस्मै सांख्यात्मने नमः।।५३।। यं विनिद्रा जितश्वासा; सत्त्वस्थाः संयतेन्द्रियाः। ज्योतिः पश्यन्ति युञ्जानास्तस्मै योगात्मने नमः ।।५४।। अपुण्यपुण्योपरमे यं पुनर्भवनिर्भयाः । शान्ताः संन्यासिनो यान्ति तस्मै मोक्षात्मने नमः ।।५५।। योऽसौ युगसहस्रान्ते प्रदीप्तार्चिर्विभावसुः । सम्भक्षयति भूतानि तस्मै घोरात्मने नमः ।।५६।। संभक्ष्य सर्वभूतानि कृत्वा चैकार्णवं जगत् । बालः स्वपिति यश्चैकस्तस्मै मायात्मने नमः ।।५७।। तद्यस्य नाभ्यां सम्भूतं यस्मिन् विश्वं प्रतिष्ठितम् । पुष्करे पुष्कराक्षस्य तस्मै पद्मात्मने नमः ।।५८।। सहस्रशिरसे चैव पुरूषायामितात्मने । चतुःसमुद्रपर्यायियोगनिद्रात्मने नमः ।।५९।। यस्य केशेषु जीमूता नद्यः सर्वाङ्गसन्धिषु । कुक्षौ समुद्राश्चत्वारस्तस्मै तोयात्मने नमः ।।६०।। यस्मात् सर्वाः प्रसूयन्ते सर्गप्रलयविक्रियाः । यस्मिंश्चैव प्रलीयन्ते तस्मै हेत्वात्मने नमः ।।६१।। यो निषण्णो भवेद्रात्रौ दिवा भवति विष्ठितः । इष्टानिष्टस्य च द्रष्टा तस्मै द्रष्टात्मने नमः ।।६२।। अकुण्ठं सर्वकार्येषु धर्मकार्यार्थमुद्यतम् । वैकुण्ठस्य च तद्रूपं तस्मै कार्यात्मने नमः ।।६३।। त्रिःसप्तकृत्वो यः क्षत्रंधर्मव्युत्क्रान्तगौरवम् । क्रुद्धो निजघ्ने समरे तस्मै क्रौर्यात्मने नमः ।।६४।। विभज्य पञ्चधाऽऽत्मानं वायुर्भूत्वा शरीरगः । यश्चेष्टयति भूतानि तस्मै वाय्वात्मने नमः ।।६५।। युगेष्वावर्तते योगैर्मासर्त्वयनहायनैः । सर्गप्रलययोः कर्त्ता तस्मै कालात्मने नमः ।।६६।। ब्रह्म वक्त्रं भुजौ क्षत्रं कृत्स्नमूरूदरं विशः । पादौ

यस्याश्रिताः शूद्रास्तस्मै वर्णात्मने नमः ।।६७।। यस्याग्निरास्यं द्यौर्मूर्धा खं नाभिश्चरणौ क्षितिः । सूर्यश्चक्षुर्दिशः श्रोत्रे तस्मै लोकात्मने नमः ।।६८।। ब्रह्म वक्त्रं भुजौ क्षत्रं कृत्स्नमूरूदरं विशः । पादौ यस्याश्रिताः शूद्रास्तस्मै वर्णात्मने नमः।।६७।। यस्याग्निरास्यं द्यौर्मूर्धा खं नाभिश्चरणौ क्षितिः । सूर्यश्चक्षुर्दिशः श्रोत्रे तस्मै लोकात्मने नमः ।।६८।। परः कालात् परो यज्ञात् परात्परतरश्च यः । अनादिरादिर्विश्वस्य तस्मै विश्वात्मने नमः ।।६९।। विषये वर्तमानानां यं ते वैशेषिकैर्गुणैः । प्राहुर्विषयगोप्तारं तस्मै गोप्त्रात्मने नमः ।।७०।। अन्नपानेन्धनमयो रसप्राणत्रि वर्धनः । यो धारयति भूतानि तस्मै प्राणात्मने नमः ।।७१।। प्राणानां धारणार्थाय योऽन्नं भुङ्क्ते चतुर्विधम् । अन्तर्भूतः पचत्यग्निस्तस्मै पाकात्मने नमः ।।७२।। पिङ्गेक्षणसटं यस्य रूपं दंष्ट्रानखायुधम् । दानवेन्द्रान्तकरणं तस्मै दृप्तात्मने नमः ।।७३।। यं न देवा न गन्धर्वा न दैत्या न च दानवाः । तत्त्वतो हि विजानन्ति तस्मै सूक्ष्मात्मने नमः ।।७४।। रसातलगतः श्रीमाननन्तो भगवान् विभुः । जगद्धारयते कृत्स्नं तस्मै वीर्यात्मने नमः ।। ७५।। यो मोहयति भूतानि स्नेहपाशानुबन्धनैः । सर्गस्य रक्षणार्थाय तस्मै मोहात्मने नमः ।।७६।। आत्मज्ञानमिदं ज्ञानं ज्ञात्वा पञ्चस्ववस्थितम् । यं ज्ञानेनाभिगच्छन्ति तस्मै ज्ञानात्मने नमः ।।७७।। अप्रमेयशरीराय सर्वतोबुद्धिचक्षुषे । अनन्तपरिमेयाय तस्मै दिव्यात्मने नमः ।।७८।। जटिने दण्डिने नित्यं लम्बोदरशरीरिणे । कमण्डलुनिषङ्गाय तस्मै ब्रह्मात्मने नमः ।।७९।। शूलिने त्रिदशेशाय त्र्यम्बकाय महात्मने । भस्मदिग्धाङ्गलिङ्गाय तस्मै रूद्रात्मने नमः ।।८० ।।चन्द्रार्धकृतशीर्षाय व्यालयज्ञोपवीतिने

। पिनाकशूल हस्ताय तस्मा उग्रातमने नमः ॥८१॥ सर्वभूतात्मभूताय भूतादिनिधनाय च । अक्रोधद्रोहमोहाय तस्मै शान्तात्मने नमः ॥८२॥ यस्मिन् सर्वं यतः सर्वं यः सर्वे सर्वतश्च यः । यश्च सर्वमयो नित्यं तस्मै सर्वात्मने नमः ॥८३॥ विश्व कर्मन्नमस्तेऽस्तु विश्वात्मन् विश्वसम्भव । अपवर्गोऽसि भूतानां पञ्चानां परतः स्थितः ॥८४॥ नमस्ते त्रिषु लोकेषु नमस्ते परतस्त्रिषु । नमस्ते दिक्षु सर्वासु त्वं हि सर्वमयो निधिः ॥८५॥ नमस्ते भगवन् विष्णो लोकानां प्रभवाप्यय । त्वं हि कर्त्ता हृषीकेश संहर्ता चापराजितः ॥८६॥ नहि पश्यामि ते भावं दिव्यं हि त्रिषु वर्त्मसु । त्वां तु पश्यामि तत्त्वेन यत्ते रूपं सनातनम् ॥८७॥ दिवं ते शिरसा व्याप्तं पद्भ्यां देवी वसुन्धरा । विक्रमेण त्रयो लोकाः पुरुषोऽसि सनातनः ॥८८॥ दिशो भुजा रविश्चक्षुर्वीर्ये शुक्रः प्रतिष्ठितः । सप्त मार्गा निरूद्धास्ते वायोरमिततेजसः ॥८९॥ अतसीपुष्प संकाशं पीतवाससमच्युतम् । ये नमस्यन्ति गोविन्दं न तेषां विद्यते भयम् ॥९०॥ एकोऽपि कृष्णस्य कृतः प्रणामो दशाश्वमेधावभृथेन तुल्यः । दशाश्वमेधी पुनरेति जन्म कृष्णप्रणामी न पुनर्भवाय ॥९१॥ कृष्णव्रताः कृष्णमनुस्मरन्तो, रात्रौ च कृष्णं पुनरूत्थिता ये । ते कृष्णदेहाः प्रविशन्ति कृष्ण- माज्यं यथा मन्त्रहुतं हुताशे ॥९२॥ नमो नरकसंत्रासरक्षामण्डलकारिणे । संसारनिम्नगावर्ततरिकाष्ठाय विष्णवे ॥९३॥ नमो ब्रह्मण्यदेवाय गोब्राह्मणहिताय च । जगद्धिताय कृष्णाय गोविन्दाय नमो नमः ॥९४॥ प्राणकान्तारपाथेयं संसारोच्छेदभेषजम् । दुःखशोकपरित्राणं हरिरित्यक्षरद्वयम् ॥९५॥ यथा विष्णुमयं सत्यं यथा विष्णुमयं जगत् । यथा विष्णुमयं सर्वं पाप्मा मे नश्यतां तथा ॥९६॥ त्वां

प्रपन्नाय भक्ताय गतिमिष्टां जिगीषवे । यच्छ्रेयः पुण्डरीकाक्ष तद्ध्यायस्व सुरोत्तम ।।९७।। इति विद्यातपोयोनिरयोनि र्विष्णुरीडितः । वाग्यज्ञेनार्चितो देवः प्रीयतां मे जनार्दनः ।।९८।। नारायणः परं ब्रह्म नारायणपरं तपः । नारायणः परो देवः सर्वं नारायणः सदा ।।९९।। एतावदुक्त्वा वचनं भीष्मस्तद्गतमानसः । नम इत्येव कृष्णाय प्रणाममकरोत्तदा ।।१००।। अभिगम्य तु योगेन भक्तिं भीश्मस्य माधवः । त्रैलोक्यदर्शनं ज्ञानं दिव्यं दत्त्वा ययौ हरिः ।।१०१।। तस्मिन्नुपरते शब्दे ततस्ते ब्रह्मवादिनः । भीष्मं वाग्भिर्बाष्प कण्ठास्तमानर्चुर्महामतिम् ।।१०२।। ते स्तुवन्तश्च विप्राग्र्याः केशवं पुरूषोत्तमम् । भीष्मं च शनकैः सर्वे प्रशशंसुः पुनः पुनः ।।१०३।। विदित्वा भक्तियोगं तु भीष्मस्य पुरूषोत्तमः । सहसोत्थाय संहृष्टो यानमेवान्वपद्यत ।।१०४।। केशवः सात्यकिश्चापि रथेनैकेन जग्मतुः । अपरेण महात्मानौ युधिष्ठिरधनञ्जयौ ।।१०५।। भीमसेनो यमौ चोभौ रथमेकं समाश्रिताः । कृपो युयुत्सुः सूतश्च सञ्जयश्च परंतपः ।।१०६।। ते रथैर्नगराकारैः प्रयाताः पुरूषर्षभाः । नेमिघोषेण महता कम्पयन्तो वसुन्धराम् ।।१०७।। ततो गिरः पुरूषवरस्तवान्विता द्विजेरिताः पथि सुमनाः स शुश्रुवे । कृताञ्जलिं प्रणतमथापरं जनं स केशिहा मुदितमनाभ्यनन्दत ।।१०८।।

इति श्रीमहाभारते शान्तिपर्वणि राजधर्मानुशासनपर्वणि

भीष्मस्तवराजः समाप्तः ।।

ॐ श्रीपरमात्मने नमः

# अथ अनुस्मृतिः

शतानीक उवाच

महामते महाप्राज्ञ सर्वशास्त्रविशारद । अक्षीणकर्म बन्धस्तु पुरूषो द्विजसत्तम ।।१।। सततं किं जपेज्जाप्यं विबुधः किमनुस्मरन् । मरणे यज्जपेज्जाप्यं यं च भावमनुस्मरन् ।।२।। यं च ध्यात्वा द्विजश्रेष्ठ पुरूषो मृत्युमागतः । परं पदमवाप्नोति तन्मे वद महामुने ।।३।। शौनक उवाच- इदमेव महाप्राज्ञ पृष्टवांश्च पितामहम् । भीष्मं धर्मभृतां श्रेष्ठं धर्मपुत्रो युधिष्ठिरः ।।४।।युधिष्ठिर उवाच- पितामह महाप्राज्ञ सर्वशास्त्रविशारद । प्रयाणकाले किं जप्यं मोक्षिभिस्तत्त्वचिन्तकैः ।।५।। किमनुस्मन् कुरूश्रेष्ठ मरणे पर्युपस्थिते । प्राप्नुयात्परमां सिद्धिं श्रोतुमिच्छामि तत्त्वतः ।।६।।भीष्म उवाच-सद्युक्तिसहितः सूक्ष्म उक्तः प्रश्नस्त्वयानघ । शृणुष्वावहितो राजन्नारदेन पुरा श्रुतम् ।।७।। श्रीवत्साङ्कं जगद्बीजमनन्तं लोकसाक्षिणम् । पुरा नारायणं देवं नारदः परिपृष्टवान् ।।८।। नारद उवाच- त्वामक्षरं परं ब्रह्म निर्गुणं तमसः परम् । आहुर्वेद्यं परं धाम ब्रह्मादि कमलोद्भवम् ।।९।। भगवन् भूतभव्येश श्रद्दधानै र्जितेन्द्रियैः । कथं भक्तैर्विचिन्त्योऽसि योगिभिर्मोक्ष काङ्क्षिभिः ।।१०।। किं च जप्यं जपेन्नित्यं कल्यमुत्थाय मानवः । कथं युञ्जन् सदा ध्यायेद् ब्रूहि तत्त्वं सनातनम् ।।११।।भीष्म उवाच-श्रुत्वा तस्य तु देवर्षेर्वाक्यं वाचस्पतिः स्वयम् । प्रोवाच भगवान्विष्णुर्नारदं वरदः प्रभुः ।।१२।। श्रीभगवानुवाच-हन्त ते कथयिष्यामि इमां दिव्यामनुस्मृतिम् । यामधीत्य प्रयाणे तु मद्भावायोपपद्यते ।।१३।। ॐकारमग्रतः कृत्वा मां नमस्कृत्य नारद । एकाग्रः

प्रयतो भूत्वा इमं मन्त्रमुदीरयेत् ।।१४।। ॐ नमो भगवते वासुदेवायेति । इत्युक्तो नारदः प्राह प्राञ्जलिः प्रणतः स्थिरः । सर्वदेवेश्वरं विष्णुं सर्वात्मानं हरिं प्रभुम् ।।१५।।

नारद उवाच -अव्यक्तं शाश्वतं देवं प्रभवं पुरूषोत्तमम् । प्रपद्ये प्राञ्जलिर्विष्णुमक्षरं परमं पदम् ।।१६।। पुराणं प्रभवं नित्यमक्षयं लोकसाक्षिणम् । प्रपद्ये पुण्डरीकाक्षमीशं भक्तानुकम्पिनम् ।।१७।। लोकनाथं सहस्राक्षमद्भुतं परमं पदम् । भगवन्तं प्रपन्नोऽस्मि भूतभव्यभवत्प्रभुम् ।।१८।। स्रष्टारं सर्वलोकानामनन्तं विश्वतोमुखम् । पद्मनाभं हृषीकेशं प्रपद्ये सत्यमच्युतम् ।।१९।। हिरण्यगर्भममृतं भूगर्भं परतः परम् । प्रभोः प्रभुमनाद्यन्तं प्रपद्ये तं रविप्रभम् ।।२०।। सहस्रशीर्षं पुरूषं महर्षिं तत्त्वभावनम् । प्रपद्ये सूक्ष्ममचलं वरेण्यमभयप्रदम् ।।२१।। नारायणं पुराणर्षिं योगात्मानं सनातनम् । संस्थानं सर्वतत्त्वानां प्रपद्ये ध्रुवमीश्वरम् ।।२२।। यः प्रभुः सर्वभूतानां येन सर्वमिदं ततम् । चराचरगुरूर्विष्णुः स मे देवः प्रसीदतु ।।२३।। यस्मादुत्पद्यते ब्रह्मा पद्मयोनिः पितामहः । ब्रह्मयोनिर्हि विश्वात्मा स मे विष्णुः प्रसीदतु ।।२४।। यः पुरा प्रलये प्राप्ते नष्टे स्थावरजङ्गमे । ब्रह्मादिषु प्रलीनेषु नष्टे लोके परावरे ।।२५।। आभूतसंप्लवे चैव प्रलीने प्रकृतौ महान् । एकस्तिष्ठति विश्वात्मा स मे विष्णुः प्रसीदतु ।।२६।। चतुर्भिश्च चतुर्भिश्च द्वाभ्यां पञ्चभिरेव च । हूयते च पुनर्द्वाभ्यां स मे विष्णुः प्रसीदतु ।।२७।। पर्जन्यः पृथिवी सस्यं कालो धर्मः क्रियाक्रिये । गुणाकरः स मे बभ्रुर्वासुदेवः प्रसीदतु ।।२८।। अग्नीषोमार्कताराणां ब्रह्मरूद्रेन्द्रयोगिनाम्। यस्तेजयति तेजांसि स मे विष्णुः प्रसीदतु ।।२९।। योगावास नमस्तुभ्यं सर्वावास वरप्रद । यज्ञगर्भ

हिरण्याङ्ग पञ्चयज्ञ नमोऽस्तु ते ।।३०।। चतुर्मूर्ति परं धाम लक्ष्म्यावास परार्चित । सर्वावास नमस्तेऽस्तु वासुदेव प्रधानकृत् ।।३१।। अजस्त्वमगमः पन्था ह्यमूर्तिर्विश्वमूर्तिधृक् । विकर्तः पञ्चकालज्ञ नमस्ते ज्ञानसागर ।।३२।। अव्यक्ताद्व्यक्तमुत्पन्नं व्यक्ताद्यस्तु परोऽक्षरः । यस्मात् परतरं नास्ति तमस्मि शरणं गतः ।।३३।। न प्रधानो न च महान् पुरूषश्चेतनो ह्यजः । अनयोर्यः परतरस्तमस्मि शरणं गतः ।।३४।। चिन्तयन्तो हि यं नित्यं ब्रह्मेशानादयः प्रभुम् । निश्चयं नाधिगच्छन्ति तमस्मि शरणं गतः ।।३५।। जितेन्द्रिया महात्मानो ज्ञानध्यानपरायणाः । यं प्राप्य न निवर्तन्ते तमस्मि शरणं गतः ।।३६।। एकांशेन जगत्सर्वमवष्टभ्य विभुः स्थितः । अग्राह्यो निर्गुणो नित्यस्तमस्मि शरणं गतः ।।३७।। सोमार्काग्निमयं तेजो या च तारामयी द्युतिः । दिवि संजायते योऽयं स महात्मा प्रसीदतु ।।३८।। गुणादिर्निर्गुणश्चाद्यो लक्ष्मीवांश्चेतनो ह्यजः । सूक्ष्मः सर्वगतो योगी स महात्मा प्रसीदतु ।।३९।। सांख्ययोगाश्च ये चान्ये सिद्धाश्च परमर्षयः । यं विदित्वा विमुच्यन्ते स महात्मा प्रसीदतु ।।४०।। अव्यक्तः समधिष्ठाता ह्यचिन्त्यः सदसत्परः । आस्थितिः प्रकृतिश्रेष्ठः महात्मा प्रसीदतु ।।४१।। क्षेत्रज्ञः पञ्चधा भुङ्क्ते स महात्मा प्रसीदतु ।।४२।। सूर्यमण्ये स्थितः सोमस्तस्य मध्ये च या स्थिता । भूतबाह्या च या दीप्तिः स महात्मा प्रसीदतु ।।४३।। नमस्ते सर्वतः सर्व सर्वतोऽक्षिशिरोमुख । निर्विकार नमस्तेऽस्तु साक्षी क्षेत्रे व्यवस्थितः ।।४४।। अतीन्द्रिय नमस्तुभ्यं लिङ्गैर्व्यक्तैर्न मीयसे । ये च त्वां नाभिजानन्ति संसारे संसरन्ति ते ।।४५।। कामक्रोधविनिर्मुक्ता रागद्वेषविवर्जिताः । नान्यभक्ता विजानन्ति न पुनर्नारका द्विजाः ।।४६।। एकान्तिनो हि निर्द्वन्द्वा

निराशी: कर्मकारिण: । ज्ञानाग्निदग्धकर्माणस्त्वां विशन्ति विनिश्चिता: ।।४७।। अशरीरं शरीरस्थं समं सर्वेषु देहिषु । पुण्यपापविनिर्मुक्ता भक्तास्त्वां प्रविशन्त्यत ।।४८।। अव्यक्तं बुद्ध्यहंकारमनोभूतेन्द्रियाणि च । त्वयि तानि च तेषु त्वं न तेषु त्वं न ते त्वयि ।।४९।। एकत्वान्यत्वनानात्वं ये विदुर्यान्ति ते परम् । समोऽसि सर्वभूतेषु न ते द्वेष्योऽस्ति न प्रियः ।।५०।। समत्वमभिकाङ्क्षेऽहं भक्त्या वै नान्यचेतसा । चराचरमिदं सर्वं भूतग्रामं चतुर्विधम् ।।५१।। त्वया त्वय्येव तत्प्रोतं सूत्रे मणिगणा इव । स्रष्टा भोक्तासि कूटस्थो ह्यतत्त्वस्तत्त्वसंज्ञितः ।।५२।। अकर्महेतुरचलः पृथगात्मन्यवस्थितः । न ते भूतेषु संयोगो भूततत्त्वगुणातिगः ।।५३।। अहंकारेण बुद्ध्या वा न ते योगस्त्रिभिर्गुणैः । न ते धर्मोऽस्त्यधर्मो वा नारम्भो जन्म वा पुनः ।।५४।। जरामरणमोक्षार्थं त्वां प्रपन्नोऽस्मि सर्वशः । ईश्वरोऽसि जगन्नाथ ततः परम उच्यसे ।।५५।। भक्तानां यद्धितं देव तद्ध्यहि त्रिदशेश्वर । विषयैरिन्द्रियैर्वापि न मे भूयः समागमः ।।५६।। पृथिवीं यातु मे घ्राणं यातु मे रसना जलम् । रूपं हुताशनं यातु स्पर्शो यातु च मारूतम् ।।५७।। श्रोत्रमाकाशमप्येतु मनो वैकारिकं पुनः । इन्द्रियाण्यपि संयान्तु स्वासु स्वासु च योनिषु ।।५८।। पृथिवी यातु सलिलमापोऽग्निमनलोऽनिलम् । वायुराकाशमप्येतु मनश्चाकाश एव च ।।५९।। अहंकारं मनो यातु मोहनं सर्वदेहिनाम् । अहंकारस्ततो बुद्धिं बुद्धिरव्यक्तमच्युत ।।६०।। प्रधाने प्रकृतिं याते गुणसाम्ये व्यवस्थिते । वियोगः सर्वकरणैर्गुणभूतैश्च मे भवेत् ।।६१।। निष्कैवल्यपदं तात काङ्क्षेऽहं परमं तव । एकीभावस्त्वया मेऽस्तु न मे जन्म भवेत्

पुनः ।।६२।। त्वद्बुद्धिस्त्वद्गतप्राणस्त्व द्भक्तस्त्वत्परायणः । त्वामेवाहं स्मरिष्यामि मरणे पर्युपस्थिते ।।६३।। पूर्वदेहकृता ये मे व्याधयः प्रविशन्तु माम् । अर्दयन्तु च दुःखानि ऋणं मे प्रतिमुञ्चतु ।।६४।। अनुध्यातोऽसि देवेश न मे जन्म भवेत्पुनः । तस्माद् ब्रवीमि कर्माणि ऋणं मे न भवेदिति ।।६५।। उपतिष्ठन्तु मां सर्वे व्याधयः पूर्वसंचिताः । अनृणो गन्तुमिच्छामि तद्विष्णोः परमं पदम् ।।६६।। श्रीभगवानुवाच- अहं भगवतस्तस्य मम चासौ सनातनः । तस्याहं न प्रणश्यामि स च मे न प्रणश्यति ।।६७।। कर्मेन्द्रियाणि संयम्य पञ्च बुद्धीन्द्रियाणि च । दशेन्द्रियाणि मनसि अहंकारे तथा मनः ।।६८।। अहंकारं तथा बुद्धौ बुद्धिमात्मनि योजयेत् । यतबुद्धीन्द्रियः पश्यन् बुद्ध्या बुद्ध्येत् परात्परम् ।।६९।। ममायमिति यस्याहं येन सर्वमिदं ततम् । आत्मनाऽऽत्मनि संयोज्य परमात्मन्यनुस्मरेत् ।।७०।। ततो बुद्धेः परं बुद्ध्वा लभते न पुनर्भवम् । मरणे समनुप्राप्ते यश्चैवं मामनुस्मरेत् ।।७१।। अपि पापसमाचारः स याति परमां गतिम् । ॐ नमो भगवते तस्मै देहिनां परमात्मने ।।७२।। नारायणाय भक्तानामेकनिष्ठाय शाश्वते । इमामनुस्मृतिं दिव्यां वैष्णवीं सुसमाहितः ।।७३।। स्वपन्विबुध्यंश्च पठन् यत्र तत्र समभ्यसेत् । पौर्णमास्याममायां च द्वादश्यां च विशेषतः ।।७४।। श्रावयेच्छ्रद्दधानांश्च मद्भक्तांश्च विशेषतः । यद्यहंकारमाश्रित्य यज्ञदानतपःक्रियाः ।।७५।। कुर्वंस्तत्फलमाप्नोति पुनरावर्तनं तु तत् । अभ्यर्चयन् पितृन् देवान् पठन् जुह्वन् बलिं ददत् ।।७६।। ज्वलन्नग्निं स्मरेद्यो मां स याति परमां गतिम् । यज्ञो दानं तपश्चैव पावनानि मनीषिणाम् ।।७७।। यज्ञं दानं तपस्तस्मात्कुर्यादाशीर्विवर्जितः । नम

इत्येव यो ब्रूयान्मद्भक्तः श्रद्धयान्वितः ।।७८।। तस्याक्षयो भवेल्लोकः श्वपाकस्यापि नारद । किं पुनर्ये यजन्ते मां साधका विधिपूर्वकम् ।।७९।। श्रद्धावन्तो यतात्मानस्ते मां यान्ति मदाश्रिताः । कर्माण्याद्यन्तवन्तीह मद्भक्तो नान्तमश्नुते ।।८०।। मामेव तस्माद्देवर्षे ध्याहि नित्यमतन्द्रितः । अवाप्स्यसि ततः सिद्धिं द्रक्ष्यस्येव पदं मम ।।८१।। अज्ञानाय च यो ज्ञानं दद्याद्धर्मोपदेशतः । कृत्स्नां वा पृथिवीं दद्यात्तेन तुल्यं च तत् फलम् ।।८२।। तस्मात्प्रदेयं साधुभ्यो जन्मबन्धभयापहम् । एवं दत्त्वा नरश्रेष्ठ श्रेयो वीर्यं च विन्दति ।।८३।। अश्वमेधसहस्राणां सहस्रं यः समाचरेत् । नासौ पदमवाप्नोति मद्भक्तैर्यदवाप्यते ।।८४।। भीष्मउवाच- एवं पृष्टः पुरा तेन नारदेन सुरर्षिणा । यदुवाच तदा शम्भुस्तदुक्तं तव सुव्रत ।।८५।। त्वमप्येकमना भूत्वा ध्याहि ध्येयं गुणातिगम् । भजस्व सर्वभावेन परमात्मानमव्ययम् ।।८६।। श्रुत्वैतन्नारदो वाक्यं दिव्यं नारायणेरितम् । अत्यन्तभक्तिमान् देव एकान्तत्वमुपेयिवान् ।।८७।। नारायणमृषिं देवं दशवर्षाण्यनन्यभाक् । इद्र जपन् वै प्राप्नोति तद्विष्णोः परमं पदम् ।।८८।। किं तस्य बहुभिर्मन्त्रैर्भक्तिर्यस्य जनार्दने । नमो नारायणायेति मन्त्रः सर्वार्थसाधकः ।।८९।। इमां रहस्यां परमामनुस्मृतिमधीत्य बुद्धिं लभते च नैष्ठिकीम् । विहाय दुःखान्यपमुच्य सङ्कटात् स वीतरागो विचरेन्महीमिमाम् ।।९०।।

इति श्रीमन्महाभारते शतसाहस्र्या संहितायां वैयासिक्यां शान्तिपर्वणि मोक्षधर्मपर्वणि श्रीविष्णोर्दिव्यमनुस्मृतिस्तोत्रं सम्पूर्णम् ।।

ॐ श्रीपरमात्मने नमः

# अथ गजेन्द्रमोक्षः

नारद उवाच-याञ्जप्यान्भगवद्भक्त्या प्रह्लादो दानवोऽजपत् । गजेन्द्रमोक्षणादींस्तु चतुरस्तान्वदस्व मे ।।१।। पुलस्त्य उवाच-शृणुष्व कथयिष्यामि जप्यानेतांस्तपोधन । दुःस्वप्न नाशो भवति यैरूक्तैः संश्रुतैः स्मृतैः ।।२।। गजेन्द्रमोक्षणं त्वादौ शृणुष्व तदनन्तरम् । सारस्वतं ततः पुण्यौ पापप्रशमनौ स्तवौ ।।३।। सर्वरत्नमयः श्रीमांस्त्रिकूटो नाम पर्वतः । सुतः पर्वतराजस्य सुमेरोर्भास्करद्युतेः ।।४।। क्षीरोदजल वीच्यग्रैर्धौतामलशिला तलः । उत्थितः सागरं भित्त्वा देवर्षिगणसेवितः ।।५।। अप्सरोभिःपरिवृतः श्रीमान्प्रस्र वणाकुलः । गन्धर्वैः किन्नरैर्यक्षैः सिद्धचारणपन्नगैः ।।६।। विद्याधरैः सपत्नीकैः संयतैश्च तपस्विभिः । वृकद्वीपिगजेन्द्रैश्च वृतगात्रो विराजते ।।७।। पुन्नागैः कर्णिकारैश्च बिल्वामलकपाटलैः । चूतनीपकदम्बैश्च चन्दनागुरूचम्पकैः ।।८।। शालैस्तालैस्त मालैश्च सरलार्जुनपर्पटैः । तथान्यैर्विविधैर्वृक्षैः सर्वतः समलंकृतः ।।९।। नानाधात्वङ्कितैः शृङ्गैः प्रस्नवद्भिः समन्ततः । शोभितो रूचिरप्रख्यैस्त्रिभिर्विस्तीर्णसानुभिः ।।१०।। मृगैः शाखामृगैः सिंहैर्मातङ्गैश्च सदामदैः । जीवंजीवकसंघुष्टैश्चकोरशिखिनादितैः ।।११।। तस्यैकं काञ्चनं शृङ्गं सेवते यं दिवाकरः । नानापुष्पसमाकीर्णं नानागन्धाधिवासितम् ।।१२।। द्वितीयं राजतं शृङ्गं सेवते यन्निशाकरः । पाण्डुराम्बुदसङ्काशं तुषारचयसंनिभम् ।।१३।। वज्रेन्द्रनीलवैडूर्यतेजोभिर्भासय -न्दिशः । तृतीयं ब्रह्मसदनं प्रकृष्टं शृङ्गमुत्तमम् ।।१४।। न

तत्कृतघ्नाः पश्यन्ति न नृशंसा न नास्तिकाः । नातप्ततपसो लोके ये च पापकृतो जनाः ।।१५।। तस्य सानुमतः पृष्ठे सरः काञ्चनपङ्कजम् । कारण्डवसमाकीर्णं राजहंसोपशोभितम् ।।१६।। कुमुदोत्पलकह्लारैः पुण्डरीकैश्च मण्डितम् । कमलैः शतपत्रैश्च काञ्चनैः समलङ्कृतम् ।।१७।। पत्रैर्मरकतप्रख्यैः पुष्पैः काञ्चनसंनिभैः । गुल्मैः कीचकवेणूनां समन्तात्परिवेष्टितम् ।।१८।। तस्मिन्सरसि दुष्टात्मा विरूपोऽन्तर्जलेशयः । आसीद् ग्राहो गजेन्द्राणां रिपुराकेकरेक्षणः ।।१९।। अथ दन्तोज्ज्वलमुखः कदाचिद् गजयूथपः । मदस्रावी जलाकाङ्क्षी पादचारीव पर्वतः ।।२०।। वासयन्मदगन्धेन गिरिमैरावतोपमः । गजो ह्यञ्जनसङ्काशो मदाच्चलितलोचनः ।।२१।। तृषितः पातुकामोऽसौ अवतीर्णश्च तज्जलम् । सलीलः पङ्कजवने यूथमध्यगतश्चरन् ।।२२।। गृहीतस्तेन रौद्रेण ग्राहेणाव्यक्तमूर्तिना । पश्यन्तीनां करेणूनां क्रोशन्तीनां च दारूणम् ।।२३।। ह्रियते पङ्कजवने ग्राहेणातिबलीयसा । वारूणैः संयतः पाशैर्निष्प्रयत्नगतिः कृतः ।।२४।। वेष्ट्यमानः सुघोरैस्तु पाशैर्नागो दृढैस्तथा । विस्फूर्य च यथाशक्ति विक्रोशंश्च महारवान् ।।२५।। व्यथितः स निरूत्साहो गृहीतो घोरकर्मणा । परमापदमापन्नो मनसाऽचिन्तयद्धरिम् ।।२६।। स तु नागवरः श्रीमान्नारायणपरायणः । तमेव शरणं देवं गतः सर्वात्मना तदा ।।२७।। एकात्मा निगृहीतात्मा विशुद्धेनान्तरात्मना । जन्मजन्मान्तराभ्यासाद्भक्तिमान्गरूडध्वजे ।।२८।। नान्यं देवं महादेवात् पूजयामास केशवात् । मथितामृतफेनाभं शङ्खचक्रगदाधरम् ।।२९।। सहस्रशुभनामानमादिदेवमजं विभुम् । प्रगृह्य पुष्कराग्रेण काञ्चनं कमलोत्तमम्

।आपद्विमोक्षमन्विच्छन्गजः स्तोत्रमुदीरयत् ।।३०।। गजेन्द्र उवाच-ॐनमो मूलप्रकृतये अजिताय महात्मने । अनाश्रिताय देवाय निःस्पृहाय नमोऽस्तु ते ।।३१।। नम आद्याय बीजाय आर्षेयाय प्रवर्तिने । अनन्तराय चैकाय अव्यक्ताय नमो नमः ।।३२।। नमो गुह्याय गूढाय गुणाय गुणवर्तिने । अप्रतर्क्याप्रमेयाय अतुलाय नमो नमः ।।३३।। नमः शिवाय शान्ताय निश्चिन्ताय यशस्विने । सनातनाय पूर्वाय पुराणाय नमो नमः ।।३४।। नमो देवाधिदेवाय स्वभावाय नमो नमः । नमो जगत्प्रतिष्ठाय गोविन्दाय नमो नमः ।।३५।। नमोऽस्तु पद्मनाभाय नमो योगोद्भवाय च ।विश्वेश्वराय देवाय शिवाय हरये नमः ।।३६।। नमोऽस्तु तस्मै देवाय निर्गुणाय गुणात्मने । नारायणाय विश्वाय देवानां परमात्मने ।।३७।। नमो नमः कारणवामनाय नारायणायामितविक्रमाय । श्रीशार्ङ्गचक्रासिगदाधराय नमोऽस्तु तस्मै पुरूषोत्तमाय ।। ३८।। गुह्याय वेदनिलयाय महोदराय सिंहाय दैत्यनिधनाय चतुर्भुजाय ।ब्रह्मेन्द्ररूद्रमुनिचारणसंस्तुताय देवोत्तमाय वरदाय नमोऽच्युताय ।।३९।। नागेन्द्रदेहशयनासनसुप्रियाय गोक्षीरहेमशुकनीलघनोपमाय । पीताम्बराय मधुकैटभनाशनाय विश्वाय चारूमुकुटाय नमोऽजराय ।।४०।। नाभिप्रजातकमलस्थचतुर्मुखायक्षीरोदकार्णवनिकेतयशोधराय । नानाविचित्रमुकुटाङ्गदभूषणाय सर्वेश्वराय वरदाय नमो वराय ।।४१।। भक्तिप्रियाय वरदीप्तसुदर्शनाय फुल्लारविन्दविपुलायतलोचनाय । देवेन्द्रविघ्नशमनोद्यत पौरूषाय योगेश्वराय विरजाय नमो वराय ।।४२।। ब्रह्मायनाय त्रिदशायनाय लोकाधिनाथाय भवापनाय । नारायणायात्महितायनाय महावराहाय नमस्करोमि ।।४३।। कूटस्थमव्यक्तमचिन्त्यरूपं नारायणं कारणमादिदेवम् ।

युगान्तशेषं पुरूषं पुराणं तं देवदेवं शरणं प्रपद्ये ।।४४।। योगेश्वरं चारूविचित्रमौलि-मज्ञेयमग्र्यं प्रकृतेः परस्थम् । क्षेत्रज्ञमात्मप्रभवं वरेण्यं तं वासुदेवं शरणं प्रपद्ये ।।४५।। अदृश्यमव्यक्तमचिन्त्यमव्ययं महर्षयो ब्रह्ममयं सनातनम् । वदन्ति यं वै पुरूषं सनातनं तं देवगुह्यं शरणं प्रपद्ये ।।४६।। यदक्षरं ब्रह्म वदन्ति सर्वगं निशम्य यं मृत्युमुखात्प्रमुच्यते । तमीश्वरं तृप्तमनुत्तमैर्गुणैः परायणं विष्णुमुपैमि शाश्वतम् ।।४७।। कार्यं क्रिया कारणमप्रमेयं हिरण्यबाहुं वरपद्मनाभम् । महाबलं वेदनिधिं सुरेशं व्रजामि विष्णुं शरणं जनार्दनम् ।।४८।। किरीटकेयूरमहार्हनिष्कै- र्मण्युत्तमालंकृतसर्वगात्रम् । पीताम्बरं काञ्चनभक्तिचित्रं मालाधरं केशवमभ्युपैमि ।। ४९।। भवोद्भवं वेदविदां वरिष्ठं योगात्मनां सांख्यविदां वरिष्ठम् । आदित्यरूद्राश्विवसुप्रभावं प्रभुं प्रपद्येऽच्युतमात्मवन्तम् ।।५०।। श्रीवत्साङ्कं महादेवं देवगुह्यमनौपमम् । प्रपद्ये सूक्ष्ममचलं वरेण्यमभयप्रदम् ।।५१।। प्रभवं सर्वभूतानां निर्गुणं परमेश्वरम् । प्रपद्ये मुक्तसङ्गानां यतीनां परमां गतिम् ।।५२।। भगवन्तं गुणाध्यक्षमक्षरं पुष्करेक्षणम् । शरण्यं शरणं भक्त्या प्रपद्ये भक्तवत्सलम् ।।५३।। त्रिविक्रमं त्रिलोकेशं सर्वेषां प्रपितामहम् । योगात्मानं महात्मानं प्रपद्येऽहं जनार्दनम् ।।५४।। आदिदेवमजं शम्भुं व्यक्ताव्यक्तं सनातनम् । नारायणमणीयांसं प्रपद्ये ब्राह्मणप्रियम् ।।५५।। नमो वराय देवाय नमः सर्वसहाय च । प्रपद्ये देवदेवेशमणीयांसमणोः सदा ।।५६।। एकाय लोकतत्त्वाय परतः परमात्मने । नमः सहस्त्रशिरसे अनन्ताय महात्मने ।।५७।। त्वामेव परमं देवमृषयो वेदपारगाः । कीर्तयन्ति च यं सर्वे ब्रह्मादीनां परायणम् ।।५८।। नमस्ते

पुण्डरीकाक्ष भक्तानामभयप्रद । सुब्रह्मण्य नमस्तेऽस्तु त्राहि मां शरणागतम् ।।५९।। पुलस्त्य उवाच-भक्तिं तस्यानुसञ्चिन्त्य नागस्यामोघसम्भवः । प्रीतिमानभवद् विष्णुः शङ्खचक्रगदाधरः ।।६०।। सांनिध्यं कल्पयामास तस्मिन् सरसि केशवः । गरूडस्थो जगत्स्वामी लोकाधारस्तपोधनः ।।६१।। ग्राहग्रस्तं गजेन्द्रं तं तं ग्राहं जलाशयात् । उज्जहाराप्रमेयात्मा तरसा मधुसूदनः ।।६२।। स्थलस्थं दारयामास ग्राहं चक्रेण माधवः । मोक्षयामास नागेन्द्रं पाशेभ्यः शरणागतम् ।।६३।। स हि देवलशापेन हूहूर्गन्धर्वसत्तमः । ग्राहत्वमगमत् कृष्णाद् वधं प्राप्य दिवंगतः ।।६४।। गजोऽपि विष्णुना स्पृष्टो जातो दिव्यवपुःपुमान् । आपद्विमुक्तौ युगपद् गजगन्धर्वसत्तमौ ।।६५।। प्रीतिमान् पुण्डरीकाक्षः शरणागतवत्सलः । अभवत्त्वथ देवेशस्ताभ्यां चैव प्रपूजितः ।।६६।। इदं च भगवान् योगी गजेन्द्रं शरणागतम् । प्रोवाच मुनिशार्दूल मधुरं मधुसूदनः ।।६७।। श्रीभगवानुवाच -ये मां त्वां च सरश्चैव ग्राहस्य च विदारणम् । गुल्मकीचकरेणूनां रूपं मेरोः सुतस्य च ।।६८।। अश्वत्थं भास्करं गङ्गां नैमिषारण्यमेव च । संस्मरिष्यन्ति मनुजाः प्रयताः स्थिरबुद्धयः ।।६९।। कीर्तयिष्यन्ति भक्त्या च श्रोष्यन्ति च शुचिव्रताः । दुःस्वप्नो नश्यते तेषां सुस्वप्नश्च भविष्यति ।।७०।। मात्स्यं कौर्मं च वाराहं वामनं तार्क्ष्यमेव च नारसिंहं च नागेन्द्रं सृष्टिप्रलयकारकम् ।।७१।। एतानि प्रातरूत्थाय संस्मरिष्यन्ति ये नराः । सर्वपापैः प्रमुच्यन्ते पुण्यं नोकमवाप्नुयुः ।।७२।। पुलस्त्य उवाच-एवमुक्त्वा हृषीकेशो गजेन्द्रं गरूडध्वजः । स्पर्शयामास हस्तेन गजं गन्धर्वमेव च ।।७३।। ततो दिव्यवपुर्भूत्वा गजेन्द्रो मुधुसूदनम् ।

जगाम शरणं विप्र नारायणपरायणः ।।७४।। ततो नारायणः श्रीमान् मोक्षयित्वा गजोत्तमम् । पापबन्धाच्च शापाच्च ग्राहं चाद्भुतकर्मकृत् ।।७५।। ऋषिभिः स्तूयमानश्च देवगुह्यपरायणैः । गतः स भगवान् विष्णुर्दुर्विज्ञेयगतिः प्रभुः ।।७६।। गजेन्द्रमोक्षणं दृष्ट्वा देवा शक्रपुरोगमाः । [illegible] महात्मानं प्रभुं नारायणं हरिम् ।।७७।। महर्षयश्च [illegible] दृष्ट्वा गजविमोक्षणम् । विस्मयोत्फुल्लनयनाः संस्तुवन्ति जनार्दनम् ।।७८।। प्रजापतिपति ब्रह्मा चक्रपाणिविचेष्टितम् । गजेन्द्रमोक्षणं दृष्ट्वा इद्र वचनमब्रवीत् ।।७९।। य इद्र शृणुयान्नित्यं प्रातरूत्थाय मानवः । प्राप्नुयात् परमां सिद्धिं दुःस्वप्नस्तस्य नश्यति ।।८०।। गजेन्द्रमोक्षणं पुण्यं सर्वपापप्रणाशनम् । कथितेन स्मृतेनाथ श्रुतेन च तपोधन । गजेन्द्रमोक्षणेनेह सद्यः पापात् प्रमुच्यते ।।८१।। एतत् पवित्रं परमं सुपुण्यं संकीर्तनीयं चरितं मुरारेः । यस्मिन् किलोक्ते बहुपापबन्धना- ल्लभ्यते मोक्षो द्विरदेन यद्वत् ।।८२।। अजं वरेण्यं वरपद्मनाभं नारायणं ब्रह्मनिधिं सुरेशम् । तं देवगुहं पुरूषं पुराणं वन्दाम्यहं लोकपतिं वरेण्यम् ।।८३।। पुलस्त्य उवाच- एतत् तवोक्तं प्रवरं स्तवानां स्तवं मुरारेर्वरनागकीर्तनम् । यं कीर्त्य संश्रुत्य तथा विचिन्त्य पापापनोदं पुरूषो लभेत ।।८४।।

इति श्रीवामनपुराणे वामनप्रादुर्भावे गजेन्द्रमोक्षः समाप्तः ।।